# चम्पूरामायणे

# बालकाण्डम्

१२ – १९.०२.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

# पुनरावर्तनम्

- अस्ति प्रशस्तविभवैः – लङ्कायाः वर्णनम्
- एनां पुराणनगरीम् – लङ्कायाः राजा रावणः, तस्य वर्णनारम्भः
- यद्बाहुराहु – रावणस्य पराक्रमेण निरस्ताः दिक्पालकाः, वैरिणश्च यमलोकं प्राप्ताः
- अम्भोजसम्भवममुम् – रावणः ब्रह्मणः वरेण उन्मत्तः त्रैलोक्यं स्ववशं करोति
- तेन वयं पराधीना इव भवामः – देवानां दुःस्थितिः
- सोऽयं कदाचित् – रावणविहारसमये भीतः सूर्यः आतपं संहृत्य तस्मात् निलीयते

एष मृगाङ्कोऽपि मृगयायासपरिश्रान्तिविश्रान्त्यै ससम्भ्रमं नमज्जनपरिवृते मज्जनगृहाभिमुखे दशमुखे तत्रत्यविचित्रतरशातकुम्भस्तम्भाग्रप्रत्यग्रप्रत्युप्त-स्फटिकशिलाशालभञ्जिकापुञ्जकरतलकलितनिजोपलमयकलशमुखादच्छाच्छा मविच्छिन्नधारामम्बुधारां निजकराभिमर्शादापादयंस्तस्य प्रसादपिशुनानां शुनासीरचिरकाङ्क्षितानां विंशतिविधवीक्षणानां क्षणमात्रं पात्रं भवति ।

- रावणं प्रसादयितुं चन्द्रस्य प्रयत्नः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# एष मृगाङ्कोऽपि...

- एषः, मृगाङ्कः, अपि, मृगया-आयास-परिश्रान्ति-विश्रान्त्यै, ससम्भ्रमम्, नमत्-जन-परिवृते, मज्जन-गृह-अभिमुखे, दश-मुखे, तत्रत्य-विचित्रतर-शातकुम्भ-स्तम्भ-अग्र-प्रत्यग्र-प्रत्युप्त-स्फटिक-शिला-शालभञ्जिका-पुञ्ज-करतल-कलित-निज-उपलमय-कलश-मुखाद्, अच्छ-अच्छाम्, अविच्छिन्न-धाराम्, अम्बु-धाराम्, निज-कर-अभिमर्शाद्, आपादयन्, तस्य, प्रसाद-पिशुनानाम्, शुनासीर-चिर-काङ्क्षितानाम्, विंशति-विध-वीक्षणानाम्, क्षणमात्रम्, पात्रम्, भवति

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# एष मृगाङ्कोऽपि मृगयायासपरिश्रान्तिविश्रान्त्यै

- एषः = अयम्
- मृगाङ्कः = चन्द्रः
- अपि
- मृगयया = आखेटेन, यः आयासः = श्रमः, तेन या परिश्रान्तिः = खेदातिरेकः, तस्याः विश्रान्त्यै = विश्रमार्थम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# ससम्भ्रमं नमज्ज्ञनपरिवृते मज्ज्ञनगृहाभिमुखे दशमुखे

- ससम्भ्रमम् = सत्वरम्
- नमज्ज्ञनपरिवृते - नमद्भिः = वन्दमानैः, जनैः = परिचरैः, परिवृते = परिवेष्टिते
- दशमुखे = रावणे
- मज्ज्ञनगृहाभिमुखे = स्नानमण्डपोन्मुखे सति

# तत्रत्यविचित्रतरशातकुम्भस्तम्भाग्रप्रत्यग्रप्रत्युप्तस्फटिकशिलाशालभञ्जिकापुञ्जकरतलकलितनिजोपलमयकलशमुखाद्

- तत्रत्याः = स्नानगृहस्थाः
- विचित्रतराः = अत्यन्त-आश्चर्यकराः
- शातकुम्भस्तम्भाग्रेषु = हिरण्मय-स्तम्भानाम् उपरिभागे
- प्रत्यग्रप्रत्युप्तः = नूतनतया प्रतिष्ठापितः
- स्फटिकशिला-शालभञ्जिका-पुञ्जः = स्फटिकमणिनिर्मितानां सुन्दरस्त्रीविग्रहाणां समूहः

# तत्रत्यविचित्रतरशातकुम्भस्तम्भाग्रप्रत्यग्रप्रत्युप्तस्फटिकशिलाशालभञ्जिकापुञ्जकरतलकलितनिजोपलमयकलशमुखाद्

- करतलकलिताः = (तेषां विग्रहाणां) हस्तेषु गृहीताः
- निजोपलमयकलशाः = चन्द्रकान्तशिलानिर्मिताः घटाः, तेषां
- मुखाद् = मुखरूपविवरात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# अच्छाच्छामविच्छिन्नधारामम्बुधारां निजकराभिमर्शादापादयन्

- अच्छाच्छाम् = अत्यन्तनिर्मलाम्
- अविच्छिन्नधाराम् = अखण्डप्रवाहाम्
- अम्बुधाराम् = जलधाराम्
- निजकराभिमर्शाद् = स्वस्य (चन्द्रस्य), कराणाम् = किरणानां, अभिमर्शात् = स्पर्शाद्
- आपादयन् = उत्पादयन्

# तस्य प्रसादपिशुनानां शुनासीरचिरकाङ्क्षितानां विंशतिविधवीक्षणानां क्षणमात्रं पात्रं भवति ।

- तस्य = रावणस्य
- प्रसादपिशुनानाम् = अनुग्रहसूचकानाम्
- शुनासीरचिरकाङ्क्षितानाम् – शुनासीरेण = देवराजेन इन्द्रेण, चिरम् = बहोः कालात्, काङ्क्षितानाम् = अभिलषितानाम् (न तु प्राप्तानाम्)
- विंशतिविधवीक्षणानाम् = विंशतिसंख्याकानां कटाक्षाणाम्

Vyoma
Samskritam · Value Education · Technology

# तस्य प्रसादपिशुनानां शुनासीरचिरकाङ्क्षितानां विंशतिविधवीक्षणानां क्षणमात्रं पात्रं भवति ।

- क्षणमात्रम् = अल्पकालम्
- पात्रम् = योग्यः
- भवति

# एष मृगाङ्कोऽपि...

- तात्पर्यम् – रावणः मृगयां समाप्य श्रान्तः सन् निवृत्य स्नानगृहं प्रति गच्छति । तस्य स्नानगृहे स्वर्णस्तम्भेषु नूतनतया प्रतिष्ठापिताः स्फटिकनिर्मिताः सुन्दरस्त्रीविग्रहाः विद्यन्ते । तासां स्त्रीणां हस्तेषु चन्द्रकान्तशिलानिर्मिताः घटाः सन्ति । रावणस्य स्नानार्थं चन्द्रः स्वस्य किरणैः तेभ्यः घटेभ्यः निर्मलजलस्य सततप्रवाहं कल्पयति । तदा प्रसन्नः रावणः क्षणमात्रं स्वस्य विंशत्या नेत्रैः चन्द्रं वीक्षते चेत् चन्द्रस्य कृतकृत्यभावना उत्पद्यते, यतो हि देवराजः इन्द्रोऽपि बहोः कालात् रावणस्य अनुग्रहकटाक्षं काङ्क्षमाणः प्राप्तुं न शक्तवान् अस्ति ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# एष मृगाङ्कोऽपि…

- मृगाङ्कः – मृगः अङ्कः यस्य सः । “अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः” (अमरः)
- मृगया – मृग्यन्ते पशवः अस्याम् – “मृग अन्वेषणे”+णिच्+श (कृत्) । “आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्” (अमरः)
- विश्रान्त्यै – वि+ “श्रमु तपसि खेदे च” + क्तिन् । इकारान्तः, स्त्री, ४.१

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# एष मृगाङ्कोऽपि...

- ससम्भ्रमम् – सम्भ्रमेण सह – अव्ययीभावः
- नमज्जनपरिवृते – नमन्तः जनाः, नमज्जनैः परिवृतः तस्मिन्
- शातकुम्भम् – “स्वर्णं सुवर्णं कनकम्... तपनीयं शातकुम्भम्” (अमरः)
- प्रत्यग्रः – “प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः” (अमरः)
- शालभञ्जिका – शालेन = वृक्षेण भज्यते = निर्मीयते इति । “वृक्षो महीरुहः शाखी.... अनोकहः कुटः शालः” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# एष मृगाङ्कोऽपि...

- अविच्छिन्नधाराम् – अविच्छिन्ना धारा यस्याः सा, ताम्
- अम्बुधाराम् – अम्बूनां धारा, ताम् । “अम्भोऽर्णः तोय-पानीय-नीर-क्षीर-अम्बु-शम्बरम्” (अमरः)
- अभिमर्शः – “मृश आमर्शने” – तुदादिः । आमर्शनम् = स्पर्शः । घञ्
- आपादयन् – आ+ “पद गतौ” + णिच् + शतृ । तकारान्तः, पुं, १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# एष मृगाङ्कोऽपि...

- प्रसादपिशुनानाम् – प्रसादस्य पिशुनाः, तेषाम् । "पिशुनौ खल-सूचकौ" (अमरः)
- विंशतिविधवीक्षणानाम् – विंशतिः विधाः येषां तानि, विंशतिविधानि वीक्षणानि, तेषाम् ।
- क्षणमात्रम् – क्षणं मात्रम् – "मात्रं कार्त्स्न्येऽवधारणे" (अमरः)
- पात्रम् – "योग्यभाजनयोः पात्रम्" (अमरः)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

तेन पुलस्त्यनन्दनेन सङ्क्रन्दननन्दनात्स्वमन्दिरोद्यानमानीतस्य मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य बन्दीकृतसुरसुन्दरीनयनेन्दीवरद्वन्द्वाच्च करारविन्दकलितकनककलशाच्च मन्दोष्णं स्यन्दमानैरम्बुभिर्जम्बालितालवालस्य पचेलिमानामपि कुसुमानां पतनभयमाशङ्कमानाः पवमानाः परिस्पन्दितुमपि प्रभवो न भवन्ति ।

- रावणाद् भीताः मरुतः ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# तेन पुलस्त्यनन्दनेन...

- तेन, पुलस्त्य-नन्दनेन, सङ्क्रन्दन-नन्दनात्, स्व-मन्दिर-उद्यानम्, आनीतस्य, मन्दार-प्रमुखस्य, वृन्दारक-तरु-वृन्दस्य, बन्दीकृत-सुर-सुन्दरी-नयन-इन्दीवर-द्वन्द्वात्, च, कर-अरविन्द-कलित-कनक-कलशात्, च, मन्द-उष्णम्, स्यन्दमानैः, अम्बुभिः, जम्बालित-आलवालस्य, पचेलिमानाम्, अपि, कुसुमानाम्, पतन-भयम्, आशङ्कमानाः, पवमानाः, परिस्पन्दितुम्, अपि, प्रभवः, न, भवन्ति ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# तेन पुलस्त्यनन्दनेन सङ्क्रन्दननन्दनात्स्वमन्दिरोद्यानमानीतस्य

- तेन = रावणेन
- पुलस्त्यनन्दनेन = विश्रवसः पुत्रेण
- सङ्क्रन्दननन्दनात् = इन्द्रस्य नन्दनवनात्
- स्वमन्दिरोद्यानम् = निजगृहस्य आरामं प्रति
- आनीतस्य = प्रापितस्य

# मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य बन्दीकृतसुरसुन्दरी-नयनेन्दीवरद्वन्द्वाच्च

- मन्दारप्रमुखस्य = “पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥” (अमरः)
- वृन्दारकतरुवृन्दस्य = देववृक्षसमूहस्य
- बन्दीकृत... - बन्दीकृताः = बलेन निरुद्धाः, याः सुरसुन्दर्यः = देवकन्याः, तासां नयनेन्दीवरद्वन्द्वात् = नेत्रोत्पलयुगलात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# करारविन्दकलितकनककलशाद्य मन्दोष्णं स्यन्दमानैः

- करारविन्द... - करारविन्देषु = हस्तपद्मेषु, कलितः = गृहीतः, यः कनककलशः = स्वर्णकुम्भः, तस्मात्
- बन्दीकृताः देवकन्याः उद्याने जलसेचनकार्ये नियुक्ताः इत्यर्थः
- मन्दोष्णम् = ईषदुष्णम् (कलशोदकं शीतम्, तासां बाष्पोदकं च उष्णम्)
- स्यन्दमानैः = प्रसवद्भिः

# अम्बुभिर्जम्बालितालवालस्य

- अम्बुभिः = जलैः
- जम्बालितालवालस्य – जम्बालितानि = पङ्कीकृतानि, आलवालानि = जलाधारमूलवलयानि, यस्य तस्य
- मन्दारादीनां देववृक्षाणां मूलानि जलसेचने नियुक्तानां देवसुन्दरीणां बाष्पजलेन कलशोदकेन च संमिश्रितेन पङ्कीकृतानि इत्यर्थः

# पचेलिमानामपि कुसुमानां पतनभयमाशङ्कमानाः

- पचेलिमानाम् अपि = पतनोन्मुखानाम् अपि
- कुसुमानाम् = पुष्पाणाम्
- पतनभयम् = अधःपातम्
- आशङ्कमानाः = आतङ्किताः

# पवमानाः परिस्पन्दितुमपि प्रभवो न भवन्ति ।

- पवमानाः = मरुतः
- परिस्पन्दितुम् अपि = चलितुम् अपि
- प्रभवः = समर्थाः
- न भवन्ति = न विद्यन्ते

# तेन पुलस्त्यनन्दनेन...

- तात्पर्य्यम् – रावणः इन्द्रं पराजित्य तस्य नन्दनवनात् मन्दारादीन् देववृक्षान् अपहृत्य स्वस्य गृहोद्याने स्थापितवान् । बन्दीकृताः सुरसुन्दरीश्च तेषां वृक्षाणां जलसेचनकार्ये नियोजितवान् । जलसेचनकाले शीतेन कलशोदकेन सह तासां बाष्पोदकस्य मिश्रणेन कदुष्णं जलं वृक्षाणाम् मूले पतति, येन तेषाम् आलवालानि पङ्कीकृतानि । तद्वृक्षाणां सुपक्वानामपि पुष्पाणां पतनं रावणस्य क्रोधमुत्पादयेदिति भिया मरुतः चलितुमपि असमर्थाः, किमुत यथेच्छं विहर्तुम्?!

# तेन पुलस्त्यनन्दनेन...

- पुलस्त्यनन्दनेन – पुलस्त्यस्य नन्दनः, तेन
- सङ्क्रन्दननन्दनात् – सङ्क्रन्दनस्य नन्दनम्, तस्मात् । "सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः" (अमरः)
- वृन्दारकतरुवृन्दस्य – वृन्दारकाणां तरवः, वृन्दारकतरूणां वृन्दः, तस्य । "वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्" (अमरः)

# तेन पुलस्त्यनन्दनेन...

- बन्दीकृत... - सुराणां सुन्दर्यः, बन्दीकृताः सुरसुन्दर्यः, नयनम् इन्दीवरम् इव, नयनेन्दीवरस्य द्वन्द्वम्, बन्दीकृतसुरसुन्दरीणां नयनेन्दीवरद्वन्द्वम्, तस्मात् । "लोचनं नयनं नेत्रम् ईक्षणं चक्षुरक्षिणी", "नीलाम्बुजन्म च इन्दीवरं च" (अमरः)
- मन्दोष्णम् – "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति" (अमरः)

# तेन पुलस्त्यनन्दनेन...

- स्यन्दमानैः – “स्यन्दू प्रस्रवणे” + शानच् (कृत्)
- अम्बुभिः – उकारान्तः, नपुं, ३.३ । “अम्भोऽर्णः तोय-पानीय-नीर-क्षीर-अम्बु-शम्बरम्” (अमरः)
- जम्बालः – “निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शाद-कर्दमौ” (अमरः)
- पचेलिमानाम् – स्वयमेव पच्यन्ते – पच् + केलिमर् (कृत्)। “कर्मकर्तरि केलिमर् वाच्यः”

# तेन पुलस्त्यनन्दनेन...

- कुसुमानाम् – “स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्” (अमरः)
- पवमानाः – “नभस्वद्-वात-पवन-पवमान-प्रभञ्जनाः” (अमरः)
- परिस्पन्दितुम् – परि-“स्पदि किञ्चिच्चलने” + तुमुन्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

# सङ्क्षेपः

- एष मृगाङ्कोऽपि – रावणस्य स्नानकाले चन्द्रः जलोत्पादनेन क्षणमात्रं वा तस्य प्रसादं प्राप्तुं प्रयतते
- तेन पुलस्त्यनन्दनेन – रावणस्य उद्यानवृक्षाणां पुष्पाणां पतनं मा भूदिति भिया मरुतः चलितुमपि असमर्थाः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in